॥ श्रीमद्वल्लभाचार्यग्रन्थरत्नमाला ॥

॥ ग्रन्थरत्नाङ्कः प्रथमः ॥

श्रीमद्वल्लभाचार्यप्रकटितं

# ॥ श्रीगायत्रीभाष्यम् ॥



श्रीमद्विट्ठलेश्वरप्रकटितगायत्रीव्याख्याकारिका-
श्रीमत्पुरुषोत्तममहाराजविरचितविवरणाभ्यामलङ्कृतं
'द्विजराजसुधा'ख्यगुर्जरानुवादसमेतं

कृष्णदासतनुजभगवत्कीर्तनकृद्बलदेवदासवित्तसेवोत्साहितेन
शास्त्रीत्युपपदधृता भृगुकच्छस्थगणपतितनुजनुषा
'एम्. ए.' इति पदवीभाजा मन्नलालेन संशोध्य

मुम्बापुर्यां निर्णयसागरमुद्रालये मुद्रयित्वा प्रसिद्धिं नीतम् ।

श्रीकृष्णाब्दाः ५१४०. द्वितीयावृत्तिः । श्रीवल्लभाब्दाः ४३८.

मूल्यमाणकद्वयम् ।

गायत्री भाष्यम्

5295

॥ श्रीकृष्णाय नमः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

# ॥ श्रीमद्वल्लभाचार्यविरचितं श्रीमद्गायत्रीभाष्यम् ॥

॥ हरिः ॐ भूर्भुवः स्वः ॥

**॥ हरिः ओम्। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॥**

अस्यायमर्थः, 'यद्यपि प्रणवो व्याहृतयश्च तथा भवन्ति तथापि तेषामर्थः स्पष्टो नेति गायत्र्यर्थो निरूप्यते,' गायत्र्यन्तर्गततच्छब्दव्याख्यानरूपस्य 'सत्यं पर'मिति 'कालत्रयाबाधितं सर्वलोकप्रसिद्धं सत्यं परं श्रेष्ठं पुरुषोत्तमरूपं सर्ववेदप्रसिद्ध'मिति सवितुरित्युक्तंप्रसवितुरिति, गायत्री हि वेदमाता वेदत्रयार्थप्रतिपादिका भवति, तेन निर्विघ्नवाक्प्रसवार्थे गायत्र्या भगवदुपस्थानं कुर्वाणा गायत्र्यर्थमाहुः, तेन गायत्र्यां जगत्प्रसवत्वेन सर्वकर्तृत्वं, यथा कामधेनोः कल्पवृक्षाच्चिन्तामणेर्मन्त्रादेश्च जायमानाः पदार्था दृश्यन्ते न हि ते विकृता भवन्ति, चतुर्विधपुरुषार्थसिद्ध्यर्थं जगज्जननमित्यर्थः, सर्वजीवानां सर्वपुरुषार्थसिद्ध्यर्थं जगदित्युक्तं भवति, गायत्र्यर्थे हि प्रसवमात्रमुक्तं न स्थितिप्रलयौ, वरेण्यभर्गशब्दाभ्यां च पश्चात्सूचितौ, वरेण्यमितिभक्तिबीजं, 'यमेवैष वृणुते तेन लभ्य' इतिश्रुतेः, एतेन परस्परवरणमुक्तं, वरणत्वोक्त्या यथा कन्या स्वाभिमतमेव स्वपतित्वेन वृणुते वरो वा तादृशीमेव कन्यां स्वस्त्रीत्वेन तथा च भगवान् स्वदासत्वेनात्मीयत्वेनाङ्गीकरोतीत्युच्यते, तथा च यथा तदनन्तरं नान्यत्र विनियोगस्तस्यास्तथैवैतस्या[१]पीति ज्ञापितं भवति, पूर्वं केनापि ज्ञातुमशक्यमित्यर्थः, वरणीयं सुंदरमिति स्वतोदोषाभाव उक्तः, भजनीयगुणान् वदन् सेवकोद्धारमाह भर्ग इति संसारनिवृत्तिः, भर्जयत्यखिलामविद्यामिति, भर्गशब्दः सकारान्तो व्याख्यातः, स्वरूपस्फूर्त्यैव सर्वेषां सर्वाविद्यानाशक इत्यर्थः, स्वरूपमेवाविद्यानाशकं, प्रमेयबलमेतत्, देवत्वेन सर्वज्ञत्वमत एव देवस्य, 'धीमही'ति 'समस्तानां तद्ध्यानं सर्वथा हित'मिति धीमहीति ध्यायेम प्रीतिं वा कुर्म इत्यर्थः, धियो यो नः प्रचोदयादिति धियः बुद्धीः प्रचोदयादिति, तेन सर्वप्रेरकत्वमायाति, प्रकृष्टत्वेन मूलपुरुषोत्तमस्वरूपपर्यन्तं चोदयादिति प्रेरयति फलसम्बन्धं करोतीत्यर्थः ॥

गायत्री बीजं, वेदो वृक्षः, श्रीभागवतं फलमिति फलसम्बन्धेन श्रीभागवतप्रतिपाद्यं 'वेद्यं वास्तवमत्र वस्त्वि'ति वास्तववस्तुषु 'पिबत भागवतं रसमालयमि'ति रसमालयं, आङ् ईषदर्थे, लयो मोक्षः, यद्रसाग्रे सोऽपीषदतितुच्छ इत्यर्थः, मोक्षाधिकरसस्तु 'ब्रह्मानन्दात् समुद्धृत्य भजनानन्दयोजने' स रसस्तु रससमूहो रास इति 'रासलीलैकतात्पर्य'मित्यर्थः, अत एव रास एव सर्वेन्द्रियास्वाद्यसाक्षात्स्वरूपसम्बन्धः मनोरथान्तरूपः, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'तिश्रुतिप्रतिपाद्यः, 'रसो वै सः रसं[२]ह्येवायं लब्ध्वानन्दीभवती'तिश्रुतेः ॥

ननु प्रचोदयादितिगायत्रीचतुर्थपादस्य संन्यासाश्रमपर्यन्तं प्रेरकत्वमायाति कथं

---

१ तत्रेत्यपि पाठः। २ वरणत्वमुक्तमितिटीकापाठः।

रासलीलातात्पर्यमिति चेत्तत्राह भक्तिमार्गीयसंन्यासस्तु साक्षात्पुष्टिपुष्टिश्रुतिरूपाणां रासमण्डलमण्डनानां, स्वयमेवोक्तं 'सन्त्यज्य सर्वविषयांस्तव पादमूलं प्राप्ता' इत्यादि, चतुर्थाध्याये ताः प्रति च भगवतोक्तं 'एवं मदर्थोज्झितलोकवेदस्वाना'मिति, तस्य स्वात्मत्वेन परमकाष्ठापन्नस्नेहास्पदप्रभुरेव स्फुरतीति 'तत्त्वमसी'तिमहावाक्यार्थस्य 'तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरु'रितिसिद्धिः ॥

"ननु 'तद्योऽहं सोऽसौ योऽसौ सोऽह'मित्यैतरेयके तैत्तिरीयके चा'हमस्मि ब्रह्माहमस्मी'ति पठ्यते, अत्र मध्यस्थं ब्रह्मपदमुभयत्र सम्बध्यते, तेनावृत्त्या व्यतिहारोऽतो ब्रह्माभेदः सिद्ध्यति, तथा लीलामध्यपातिभक्तानामपि 'कृष्णोऽहमहं कृष्ण'इतिभाव उल्लेखश्च श्रूयते, अतस्तदभेदज्ञानं भक्तिफलमितिप्रफुल्लमानं प्रतिवादिनं तत्स्वरूपं बोधयति, रसात्मकत्वाद्भक्तेः संयोगविप्रयोगात्मकत्वाद्द्वितीयभावोद्रेके यथेतरेऽश्रुप्रलापादयो व्यभिचारिभावास्तथाऽतिविगाढभावेन तदभेदस्फूर्तिरप्येकः, स नँ तु सार्वदिकस्तदात्मानं तत्त्वेन विशिंषन्ति तं च स्वात्मत्वेन, सोऽत्र व्यतिहारपदार्थ इत्यर्थः, अपरं च, उद्देश्यविधेयभावस्फूर्त्या न ह्यद्वैतज्ञानमस्ति, किन्तु भावनामात्रं, भक्तानां तु विरहभावे तदात्मकत्वमेवाखण्डं स्फुरति येन लीलाः स्वतः कुर्वन्त्येतद्यथा तथा श्रीमद्भागवतदशमस्कन्धविवृतौ प्रपञ्चितमस्माभिः, एवं सति मुख्यं यदद्वैतज्ञानं तद्भक्तिभावैकदेशव्यभिचारिभावेष्वेकतरवदिति सर्षपस्वर्गाचलयोरिव ज्ञानभक्त्योस्तारतम्यं कथं वर्णनीयमितिभावः ॥"

भक्तिमार्गीयसंन्यासे चतुर्थपादगायत्र्यर्थस्तु, 'योऽहं सोऽसौ योऽसौ सोऽह'मिति, 'यः' पुरुषोत्तमः, 'अहं' भक्तः, फलप्रकरणप्रथमाध्याये 'बाहुप्रसार' इति भिन्नसंयोगोक्तिः, द्वितीयाध्याये 'अन्तर्हिते भगवती'त्यादिना विप्रयोगेऽसावुभयत्रैकात्मको भवतीति द्वितीये 'सोऽसौ', तृतीयाध्यायेप्येकात्मनोरेतद्द्विवचनोभयभावात्मकस्फूर्तिः, 'योऽसौ' उभयभावात्मकः, चतुर्थाध्याये 'तासामाविरभूदि'त्यादिनोक्तः 'सोऽह'मिति 'सः' पुरुषोत्तमः 'अहं' भक्तो भिन्नोऽस्मि, तत्प-ञ्चमाध्याये संयोगरसे परमकाष्ठापन्नोनिर्वचनीयरससमूहरासरसाधिकल्लोलसर्वेन्द्रियास्वाद्यरसानुभवं करोति, वेदोक्तमहावाक्यात् 'तत्त्वमसि' 'अहमस्मि' 'ब्रह्माहमस्मी'त्यादिविप्रयोगभावात्मकरसानन्दो भवति, संयोगरसे 'कृष्ण तवास्मी'ति, 'अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं ममे'ति 'मामेकमेव शरणमात्मानं सर्वदेहिनां याहि सर्वात्मभावेन यास्यसे ह्यकुतोभय'मित्यादीतिदिक्, अत एव श्रुतिः 'आत्मानं द्वेधापातयत पतिश्च पत्नी चाभवता'मिति, व्याससूत्रे 'लोकवत्तु लीलाकैवल्य'मित्यादि ।

सर्वाज्ञातस्वरूपं हि ब्रह्म पूर्वं रिरंसया । ततोऽखिलजगद्रूपं भूत्वा तत्रातिदुस्तराः ॥ १ ॥
भक्ताः सर्वं परित्यज्य प्रभुप्राप्त्यै यथा रहः । साक्षात्स्वरूपदानेन परा लीलेयमित्यपि ॥ २ ॥
लीलासम्बन्धिनस्तत्र सर्वं भगवदात्मकम् । प्रवर्तकत्वतो वेणुनादो वेदात्मकोऽत्र हि ॥ ३ ॥

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति दिक्॥

॥ इति श्रीमद्वल्लभाचार्यविरचितं श्रीमद्गायत्रीभाष्यं सम्पूर्णम् ॥

---

१ श्रीकृष्णद्वैपायन इति शेषः, तदाशयमेव प्रकटीकुर्वन्ति भक्तिमार्गीयेत्यादिना । २ ताभिरेव । ३ फलप्रकरणीये । ४ नन्वित्यारभ्य भाव इत्यन्तं व्याख्यानं ब्रह्मसूत्रसाधनाध्यायतृतीयपादद्वादशाधिकरणस्थ'व्यतिहारो विशिंषन्ति हीतरव'दितिसूत्रव्याख्यानान्न भिद्यतेऽल्पशोऽपि । ५ पम्फुल्लमानमित्यपि पाठः । ६ श्रीकृष्णद्वैपायनस्तत्त्वसूत्रे साधनाध्याये द्वादशाधिकरणे । ७ स च नेत्यपि पाठः ।

## ॥ अथ श्रीमद्विट्ठलेश्वरविरचिता श्रीगायत्रीव्याख्या ॥

**श्रीकृष्णः स्वात्मनः सर्वमुत्पाद्य विविधं जगत्। तदासक्तांशबोधाय शब्दब्रह्माभवत्स्वयम्॥१॥**
**तत्र सर्गादिभिः क्रीडन्नित्यानन्दरसात्मकः। निजभावप्रकाशाय गायत्रीरूप उद्बभौ ॥ २ ॥**
**सा षड्गुणयुतं सर्ववेदबीजं गुणातिगम्। सर्वावताररूपं हि सर्वतत्त्वोपबृंहितम् ॥ ३ ॥**
**शृङ्गारैश्वर्यसंयुक्तं पुरुषद्वयपूरणम्। भक्त्या सर्वेन्द्रियाह्लादि चतुर्विंशाक्षरं ततः ॥ ४ ॥**
**मार्गत्रयप्रकटनं भावत्रयविवर्धनम्। सच्चिदानन्दपूर्णं च त्रिपदेति प्रकीर्त्यते ॥ ५ ॥**
**छन्दो मन्त्रस्य गायत्री प्रेमोल्लासादहर्निशम्। गायन्तं त्रायते भावमाच्छादयति चैव हि ॥६॥**
**विश्वामित्रो जगन्मित्रमृषिरत्र हरिः स्वयम्। 'मित्रे चर्षा'विति प्रोक्तेः पूर्वाच्चापि प्रतीयते ॥७॥**

---

### ॥ अथ श्रीमत्पुरुषोत्तममहाराजविरचितं विवरणम् ॥

अथ श्रीमत्प्रभुचरणाः श्रीमद्भागवतारम्भे गायत्र्या उपनिबद्धत्वात्तस्याः स्वरूपं बोधयितुं तदर्थं व्याकुर्वन्तो यथा पुरुषविधब्राह्मणे क्रीडेच्छया रूपसृष्टौ स्वरूपस्य द्वैधीभावेन पतिपत्नीभावसम्पादनोत्तरं नानारूपसृष्टिस्ततः स्वतिरोभावेन जीवानां मोहसम्पादने संसारासक्तिस्तथात्र तदुत्तरं नामसृष्टिः परन्तु मोहनिवारणाय स्वस्य रसरूपत्वबोधनेनाश्रयदानायेतिफलभेदं बोधयितुं, एतदेवाभिप्रेत्य नवलक्षणलक्षिताश्रयनिरूपकश्रीभागवतारम्भ उपनिबन्धं च बोधयितुं वेदोत्पत्तिप्रयोजनमादावाहुः **श्रीकृष्ण** इत्यादि, अयं प्रकारः, 'स आत्मानं स्वयमकुरुते'त्युक्तायामेव सृष्टौ 'नेतरत्रे'तिवेदशब्देभ्यो जगन्निर्माणबोधकश्रुतिस्मृतीनां न विरोध इत्याशयेनाहुः **स्वात्मन** इति, **शब्दब्रह्मे**ति 'स एष जीव' इत्यत्रोक्तनादात्मा निःश्वसितस्यावस्थाविशेषरूपः ॥ १ ॥

ततो गायत्र्युत्पत्तिमाहुः **तत्रे**त्यादि, तत्रेति स्वात्मके स्वकृते प्रपञ्चे ॥ २ ॥

तस्याः प्रणवोत्तरावस्थात्वबोधनायाहुः **से**त्यादि, **सर्ववेदबीजमोङ्कारः** 'स सर्वमन्त्रोपनिषद्वेदबीज'मितिवाक्यात्, तेन यथा तत्र रूपस्य पतिपत्नीभावस्तथात्र नादस्य क्रमेणोङ्कारगायत्रीभाव इत्यर्थः, एतेन गायत्रीकल्पादिप्रसिद्धं सगुणत्वमत्र न विवक्षितमितिबोधितं, तत्र गमकं वक्तुं तद्ब्राह्मणं व्याकुर्वन्तो मन्त्रस्याक्षरात्मकत्वात् पूर्वं तदक्षरसङ्ख्याप्रयोजनमाहुः **सर्वे**त्यादि, क्षराक्षररूपत्वबोधनायार्धेन प्रयोजनद्वयमुक्तम् ॥ ३ ॥

तृतीयमेकेनाहुः **शृङ्गार** इत्यादि, शृङ्गारो द्विधा, ऐश्वर्यमष्टधा, अन्तरिन्द्रियं चतुर्धा, बाह्येन्द्रियाणि दश, एवं चतुर्विंशतिः, पुरुषोत्तमत्वबोधनायेदं, तत्रापि सर्वान्तरत्वबोधनाय **पूरण**पदम् ॥ ४ ॥

प्रचारार्थं पदसङ्ख्यातात्पर्यमाहुः **मार्गे**त्यादि, ज्ञानकर्मभक्तिरूपमार्गत्रयस्य प्रकटनं यस्मादिति व्यधिकरणपदो बहुव्रीहिः, एवमग्रेपि भावत्रयं च विभावानुभावव्यभिचारिभेदेन ज्ञेयं, इदमपरं गमकम् ॥ ५ ॥

एवं गुणातीतपरिचायनाय द्वयमुक्त्वा अतः परं तैत्तिरीयश्रुत्युक्तक्रमेणैव उक्तार्थानां पदार्थानां स्वरूपमाहुः **छन्द** इत्यादि, 'छादनाच्छन्द ईत्युक्तमाकृतेर्वाससी यथा आत्मानं छादितं देवैर्मृत्युभीतैश्च वै पुरा आदित्यैर्वसुभी रुद्रैस्तेन छन्दांसि तानि वै' इतियोगियाज्ञवल्क्योक्तं 'सर्वेषां मन्त्रतत्त्वानां छादनाच्छन्द उच्यते' इतिवाक्योक्तं च छन्दस्त्वप्रयोजकं रूपमाहुः **भाव**मित्यादि ॥ ६ ॥

'विश्वस्य जगतो मित्रं विश्वामित्रः प्रजापति'रितिबृहद्याज्ञवल्क्योक्तमृषिस्वरूपमाहुः **विश्वामित्र**

---

१ उद्दिष्टमित्यपि पाठः।

**सविता सर्वबीजानां निजाना देवतास्य हि। आचार्यो भगवानग्निर्मुखमस्य प्रकीर्तितम् ॥८॥**
**गतिज्ञानार्थधातूक्त्या नलोपाच्च प्रतीयते । लोपस्यादर्शनात्मत्वाप्राकृतानुकृतिर्मता ॥ ९ ॥**
**'ब्रह्मा शिरो' जगद्बीजं सत्यलोकस्थितेरपि। यज्ञात्मको जगद्व्यापी शृङ्गाररसविग्रहः ॥१०॥**
**'विष्णुर्हृदय'मित्युक्तं हृद्ययं हृदयं श्रुतौ । तत्तद्धर्मप्रधानत्वात्सर्वं च स्वयमेव हि ॥ ११ ॥**
**'रुद्रः शिखे'तिकथनात्क्लेशात्मा स निरूपितः। अहङ्कारो बन्धरूप इति बद्धा शिखा मता॥१२॥**
**मुखस्याग्नित्वकथनात्तज्ज्वाला च शिखा मता। लौकिकी दुष्टदाहाय 'घोरातनु'रितिश्रुतेः॥१३॥**

---

इत्यादि, लौकिकमृषिं परित्यज्य भगवद्ग्रहणे बीजमाहुः **मित्र** इत्यादि, इदं हि विश्वशब्दस्य दीर्घविधायकं सूत्रं, इतः पूर्वं तु 'विश्वस्य वसुराटो'रिति, तथा च विश्वराजो विचारे निरङ्कुशं विश्वाराद्ध्त्वं यथा 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ती'तिश्रुतिपुराणादिभिर्हरावेव सिद्धं, एवं 'केचित्स्वदेहान्तर्हृदयावकाशे'त्यादिपुराणे'द्वासुपर्णे'त्यादिश्रुतिभिश्च निरङ्कुशविश्वामित्रत्वमपि, तस्यर्षित्वं च 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिपो रुद्रो महर्षि'रितिमन्त्रे तथा पुराणेषु च सिद्धमतोऽत्र स एवर्षिरित्यर्थः ॥ ७ ॥

'यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या तदाकारा भवेत्तस्य देवत्वं देवतोच्यत' इतियाज्ञवल्क्योक्तेर्देवतानिष्कर्षमाहुः **सविते**त्यादि, जन्माद्यधिकरणे 'सर्वयोनिषु कौन्तेये'तिगीतायां च तथैव सिद्धत्वात्स एव देवतेत्यर्थः, एतत्रयज्ञापनं चात्यावश्यकं ऋचा'अविदितार्थेन छन्दोदैवतब्राह्मणेन मन्त्रेण याजयत्यध्यापयति वा स स्थाणुं वर्च्छेति गर्तं प्रतिपद्यत'इति तदज्ञाननिन्दाश्रुतेरिति, 'अग्निर्मुखमि'तिश्रुतिं विवृण्वन्ति **आचार्य** इत्यादि ॥ ८ ॥

तदवगतिप्रकारमाहुः **गती**त्यादि, 'अकि अगि गता'विति गत्यर्थोऽगिधातुः गत्यर्थानां च ज्ञानार्थत्वं प्रसिद्धं, तस्मा'च्चाङ्गेर्नलोपश्चे'तिसूत्रेण नलोपे निप्रत्यये च जातेऽग्निरिति भवति, तथा चाङ्गतेर्गत्यात्मकज्ञानाधारो भवतीत्यर्थाद्धातूक्त्या चार्थत्वप्रतीतिरित्यर्थः, नलोपात्तत्प्रतीतिप्रकारमाहुः **लोपस्ये**त्यादि ॥९॥

'ब्रह्मा शिर'इतिश्रुतिं विवृण्वन्ति **ब्रह्मे**त्यादि ॥ १० ॥

'विष्णुर्हृदय'मित्येतां विवृण्वन्ति **यज्ञात्मक** इत्यादि, 'यज्ञो वै विष्णु'रितिश्रुते'र्विष्लृ व्याप्ता'वितिधात्वर्थान् 'रसो वै स'इतिश्रुत्या शृङ्गाररसात्मकत्वात् स तथेत्युक्तमित्यर्थः, हृदये विशेषमाहुः **हृद्यय**मित्यादि, छान्दोग्ये दहरविद्यायां 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद् हृदय'मिति, तथा चात्मत्वबोधनायात्र हृदयपदं न त्ववयवविशेषत्वमात्रबोधनायेत्यर्थः, ननु प्रायपाठेनात्रदेवताविशेष एव प्रत्याख्यो न तु पर इत्यत आहुः **तत्तदि**त्यादि, तथा च 'तस्मिन् स्वयं वेदमयो विधाता स्वयम्भुवं यं स्म वदन्ति सोभूदि'त्यत्रोक्तो भगवद्रूप एव ब्रह्मापि ज्ञातव्य इत्यर्थः, एवं सर्वत्र बोध्यम् ॥ ११ ॥

'रुद्रः शिखे'तिश्रुतिं द्वाभ्यां व्याकुर्वन्ति **रुद्र** इत्यादि, क्लेशात्मत्वं 'रोदयन्तीति रुद्रा'इति बृहदारण्यके निर्वचनाज्ज्ञेयं, अहङ्कारत्वं च 'वैकारिकस्तैजसश्चे'तिदशमस्कन्धे 'शिवः शक्तियुतः शश्वदि'तिसन्दर्भीयवाक्याज्ज्ञेयम् ॥ १२ ॥

'घोरातनु'रितीयं श्रुतिस्तैत्तिरीयसंहिताद्वितीयाष्टके 'अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेत् अभिचरन्नेषा वा अस्य घोरा तनुर्यद् रुद्र' इत्याभिचारिकमिष्टिविशेषं प्रक्रम्य पठितास्तीति ततः सर्वस्यैव विवक्षितार्थस्य सिद्धिः ॥ १३ ॥

**पृथिवी भगवत्कीर्तेरुत्पत्तेः कारणं मतम् । भक्तिबोधाय चरणरेणु रूपत्वकीर्तनम् ॥ १४ ॥**
**प्रियत्वाय हरेः सर्वप्राणात्मत्वेन वर्णनम् । शुक्लभास्वररूपं तु श्वेतवर्णेतिकीर्तितम् ॥ १५ ॥**
**भगवद्योग्यतासिद्ध्यै श्वेतः सर्वाधिको मतः । साङ्ख्यायनसगोत्रत्वं भगवद्भोगसिद्धये ॥१६॥**
**स हि ब्रह्म परं जीवः सच्चिदानन्दतोभयोः । सगोत्रत्वमतः प्रोक्तं न वैलक्षण्यमण्वपि ॥१७॥**
**भगा देशादयो वापि शक्तयश्चेन्द्रियाणि च । ज्ञानानि खण्डाखण्डानि कुक्षौ सर्वविनिश्चयात् ॥१८॥**
**धामान्यर्थविभावाश्च सर्वोपनिषदः शिरः । समीपनयने विष्णोर्विनियोगः प्रकीर्तितः ॥ १९ ॥**

---

'पृथिवी योनि'रिति व्याकुर्वन्ति **पृथिवी**त्यादि, प्रथ प्रख्याने, प्रथनात्पृथिवी, प्रथनं च 'त्वमेतद्विपुलीकुर्वे'त्यादिवाक्यैः सिद्धं, तथा च सैवात्र विवक्षिता न तु भूतात्मिकेत्यर्थः, श्रवणादीन् प्रति कीर्तेरेवोत्पत्तिहेतुत्वेन विवक्षितत्वात् तत्कार्यभूतभक्तिबोधनाय चरणरेणुरूपपृथिवीत्वकीर्तनमित्यर्थः ॥ १४ ॥

'प्राणापानव्यानोदानसमाना सप्राणे'त्येतद्व्याकुर्वन्ति **प्रियत्वाये**त्यादि, प्राणेषु प्रियत्वस्य लोकवेदप्रसिद्धत्वात्तदात्मकत्वे सति स प्राण इन्द्रप्रतर्दनोपाख्याने सिद्धो य आत्मरूपः प्राणस्तत्सहितातस्तथावर्णनमित्यर्थः, 'श्वेतवर्णे'ति व्याकुर्वन्ति **शुक्ले**त्यादि, **भास्वर**त्वं प्रकाशकचैतन्यरूपत्वाज्ज्ञेयम् ॥ १५ ॥

'साङ्ख्यायनसगोत्रे'ति व्याकुर्वन्ति **साङ्ख्यायने**तिसार्धेन, हि यतो हेतोः स साङ्ख्यायनः, साङ्ख्यं पदार्थे सङ्ख्यायुक्तं ब्रह्मवादसिद्धं ज्ञानमयनं ज्ञापकं यस्य ॥ १६ ॥

तादृशवेदात्मा ब्रह्म, परं परन्तु, **जीवः** 'स एव जीव' इतिवाक्यात्प्राणधारणप्रयत्नवत्त्वेन जीवः उभयोर्जीवब्रह्मणोः सच्चिदानन्दता, **अतः सगोत्रत्वं प्रोक्तं** तत्प्रयत्नत्यागे त्वण्वपि **वैलक्षण्यं** नास्ति, तेन भोगसिद्धिरित्यर्थः, ॥ १७ ॥

'चतुर्विंशत्यक्षरा त्रिपदे'त्यस्य प्रागेव व्याख्यातत्वात् 'षट्कुक्षि'रिति व्याकुर्वन्ति **भगा** इत्यादि, भगा ऐश्वर्यादयः, देशादयो देशकालद्रव्यकर्तृमन्त्रकर्माणि, शक्तयः कर्मेन्द्रियाणां समनसां सामर्थ्यानि, इन्द्रियाणि समनांसि ज्ञानेन्द्रियाणि, ज्ञानानि खण्डाखण्डानि, एकैकदर्शनैकैकाङ्गजन्यानि खण्डानि, तान्येव गुणोपसंहारेणान्धहस्तिन्यायेन विशिष्टनिदिध्यासनरूपाणि सन्त्यखण्डानि कुक्षिरूपाणि भवन्तीत्यतः षट्कुक्षिरित्यर्थः, तत्र हेतुः **कुक्षौ विनिश्चया**दिति, समुद्रवत् कुक्षेः सर्वाधारतया विशेषेण सर्वनिश्चयादित्यर्थः ॥ १८ ॥

'पञ्चशीर्षे'ति व्याकुर्वन्ति **धामानी**त्यादि, श्वेतद्वीपानन्तासनवैकुण्ठध्रुवस्थानगोलोकधामानि, अर्थास्तन्मात्राणि धर्मार्थकाममोक्षभक्तयो वा, पञ्चास्यशब्द इव पञ्चशीर्षशब्दो विस्तारवाचीत्यभिप्रेत्य पक्षान्तरमाहुः **विभावे**त्यादि, तेषां तेषां भगवदीयानां रसानामालम्बनोद्दीपनविभावाः रूपादय ऋत्वादयश्च, सर्वोपनिषदस्तत्तच्छाखास्थाः, उपनिषदां शिरस्त्वं तु 'ऋचां मूर्धानं यजुषामुत्तमाङ्गं साम्नां शिरोऽथर्वणां मुण्डमुण्ड'मितिकौशीतकीये श्रावितं, अन्येषां तूत्कर्षनियामकत्वाभ्यां ज्ञेयं, अत्र सर्वं **ज्योतिश्चरणाधिकरणो**क्तरीत्या वाच्यवाचकाभेदविवक्षया चोपपन्नमिति न काचिदनुपपत्तिः, 'उपनयने विनियोग' इति व्याकुर्वन्ति **समीपे**त्यादि, विनियोगलक्षणं तु **योगियाज्ञवल्क्ये**नोक्तं 'पुराकल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च अनेनेदं तु कर्तव्यं विनियोगः स उच्यत' इति, ब्राह्मणलक्षणमपि तत्रैव निरुक्तं 'यस्य मन्त्रस्य समुत्पत्तिः प्रयोजनं प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यत' इति, तन्त्विह 'आयातु वरदा देवी'त्यारभ्य श्रुतं, तथापि 'गायत्र्या गायत्री छन्द'इत्यादेरर्थज्ञानेन पूर्वोक्तं सर्वमेव तदनुगुणीभविष्यतीत्येतदारभ्यैव व्याख्यातमिति बोध्यम् ॥ १९ ॥

**सप्त व्याहृतयः प्रोक्ता भूरैश्वर्यमुदाहृतम् । सर्वाधारत्वतस्तावच्छक्तित्वान्नास्य बाधनम् ॥२०॥**
**अन्तरिक्षत्वकथनाद्भुवो वीर्यं निरूपितम् । सुवः श्रीः श्रीर्मनुष्यस्य कथनादवसीयते ॥२१॥**
**महो यशः परं प्रोक्तं सुखं तेजस्ततोऽत्र हि । जनो वैराग्यमित्युक्तं तापनाशकता यतः ॥२२॥**
**जनतायां तु तन्मुख्यमतो जन इतीरितम् । यस्य ज्ञानमगं प्रोक्तं तपस्तस्मात्तदेव हि ॥२३॥**
**सत्यं परमिति प्रोक्तं स्वरूपमिति निश्चितम् । लोकवेदप्रसिद्धार्थकथनाय तदीयताम् ॥ २४ ॥**

---

एतदग्रे 'ओम् भू'रित्यादिना प्रणवाभ्यासः सप्त व्याहृतयश्चोक्ताः, तत्र प्रणवो गायत्रीशिरःसमाप्तावपि वर्तेत इति तं तत्रैव विवरिष्यन्तोत्र व्याहृतीरेवाहुः **सप्ते**त्यादि, **प्रोक्ता** इति विनियोगोक्त्यनन्तरमुक्ताः, एतासां व्याहृतित्व तेनैव निरुक्तं पूर्वं तासां त्रिचतुष्पञ्चसप्तभेदानुक्त्वा 'भूर्भुवः स्वस्तथा पूर्वं स्वयमेव स्वयम्भुवा व्याहृता ज्ञानदेहेन तेन व्याहृतयः स्मृता' इति, विवक्षिता भेदास्तत्रैवोक्ता इत्यनपेक्षित्वादन्य इहोच्यन्ते, तत्राद्यायाः सद्वाचकत्वादैश्वर्यमेव मुख्यत्वेन तया प्रतिपाद्यत इति बोधयन्ति **भूरि**त्यादि, तत्र हेतुः **सर्वाधारत्वत** इति भगवदैश्वर्यस्य तथात्वादित्यर्थः, ननु मुख्यार्थपरित्यागेन किमित्येवं व्याख्यायत इत्यत आहुः **ताव**दित्यादि, गीतायां 'उत्तमः पुरुषस्त्वन्यः परमात्मे'त्युदाहृतः यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर' इत्यैश्वर्येणैव सर्वाधारत्वबोधनमतो भगवतस्तावच्छक्तित्वादस्यैवं व्याख्यानस्य कुतर्केभ्यो न बाधनं, व्यासचरणैरेवोत्तरतन्त्रे तथाङ्गीकारात्, तथा च लौकिकार्थग्रहण एव मुख्यार्थत्यागो वृत्तिसङ्कोचश्च न त्वत्रेत्यर्थः ॥ २० ॥

द्वितीयां विवृण्वन्ति **अन्तरिक्षे**त्यादि, लोकप्रसिद्धविचारे भुवरन्तरिक्षत्वकथनात् 'तेन्तरिक्षमजयन्नि'तिश्रुत्या तस्मिन् रुद्राणां प्रभुत्वात् द्वितीयस्कन्धीयतृतीयाध्याये वीर्यकामानां तद्भजनस्योक्तत्वात् तत्प्रभुत्वेन भुवःपदाद्वीर्यं निरूपितमित्यर्थः, तृतीयामाहुः **सुव**रित्यादि, तैत्तिरीयाणां सप्तमाष्टके द्वात्रिंशद्रात्रप्रसङ्गे श्रावितं, 'श्रीर्हि मनुष्यस्य सुवर्गो लोक' इति, अत एवंकथनात् भगवतः श्रीरेव **सुव**रित्यर्थः, ॥ २१ ॥

चतुर्थीमाहुः **मह** इत्यादि, तत्र हेतुः **यशः परं प्रोक्त**मिति, लोके शास्त्रे च श्र्यपेक्षया यश एव उत्कृष्टं प्रोक्तं, ततो यशस्त्वादेवात्र महर्लोके सुखं स्वर्गापेक्षयाधिकं तेजोबोधकमहःशब्दवाच्यत्वात्, हि निश्चयेन तेज इत्यर्थः, एतेन सर्वप्रसिद्धार्थग्रहणेपि तत्स्वरूपविचारतस्तेषां भगवद्धर्मांशतैव स्फुटतीति व्याख्यातोर्थः सर्वोप्यविवाद इत्यर्थः, पञ्चमीमाहुः **जन** इत्यादि, वैराग्यत्वे हेतुः **तापे**त्यादि, 'जनं प्रयान्ति तापार्ता महर्लोकनिवासिन' इतिवाक्यात्स लोकस्तापनाशकता च वैराग्य एव स्फुटेति जनो वैराग्यमित्युक्तमित्यर्थः ॥ २२ ॥

ननु तत्राग्नेय एव तापो नाश्यते न तु सांसारिक इति कथं वैराग्यतेत्यत आहुः **जनताया**मित्यादि, 'स्वायम्भुवं ब्रह्मसत्रं जनलोकेऽभवत्पुरा तत्रस्थानां मानसानां मुनीनामूर्द्ध्वरेतसा'मित्यादिवाक्यात् तत्रत्यजनसमूहे मुख्यं वैराग्यमतो न संशयस्तथात्व इत्यर्थः, षष्ठीमाहुर्**यस्ये**त्यादि, **तदे**वेति ज्ञानमेवेत्यर्थः, **हि**र्हेतौ, श्रुतिस्तु **श्वेताश्वतरस्था** ॥ २३ ॥

सप्तमीमाहुः **सत्य**मित्यादि 'सत्यं परं परं सत्य'मितिश्रुतिस्तैत्तिरीयोपनिषदि, अत्र सत्यस्य परत्वेन विधानात् निरंकुशस्य परत्वस्य च स्वरूप एव सत्त्वादत्र तदेव निश्चितं अर्थत्वेन निर्णीतमित्यर्थः, एवं सार्धचतुर्भिर्व्याहृतयो व्याख्याताः, अतः परं गायत्र्याः पदानि सार्द्धसप्तभिर्विवृण्वन्ति **लोके**त्यादि, 'अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इत्यस्यार्थस्य कथनाय, गायत्रीस्थस्तच्छब्द ईयतां ज्ञायतामित्यर्थः ॥ २४ ॥

**द्वादशात्मत्वकथनात् सविता पुरुषोत्तमः । रूपमासक्तिजनकं च [illegible] धामेतीरितम् ॥ २५ ॥**
**वरणे स्वार्थपरतानिवृत्त्यै वृणुते यतः । अन्योन्यरसबाधाय तथा वा सदुदीरितम् ॥ २६ ॥**

---

**द्वादशात्मे**त्यादि, 'द्वादशो हि पुरुष'इतिश्रुत्या पुरुषस्य द्वादशात्मकत्वकथनात् निरङ्कुशस्य जगज्जनकत्वस्य तस्मिन्नेव पुरुषे सत्त्वात्सवितृपदेनात्र पुरुषोत्तम एवोच्यत इत्यर्थः, एतेन 'विश्वामित्र ऋषिश्छन्दो गायत्र्या देवता रवि'रितिभारद्वाजोक्तं प्रतीकविषयत्वादनादरणीयमिति बोधितं, स्मृत्यन्तरे तु 'आदित्यमण्डलासीनं रुक्माभं पुरुषं परं ध्यायन् जपेत्तदित्येतन्निष्कामो मुच्यते द्विज' इति, तथा 'आदित्यमण्डलान्तःस्थं परं ब्रह्माधिदैवतं छन्दोनिवृत्त्या गायत्री मया दृष्टा सनातनी'त्युक्तं, **शैवास्तु भर्ग**शब्दं प्रथमान्त'मकर्तरि च कारके सञ्ज्ञाया'मितिसूत्रेण घञन्तं चाङ्गीकृत्य यो भर्गो नो धियः प्रचोदयात् तत्पदं च लुप्तषष्ठीकमङ्गीकृत्य तस्य सवितुर्देवस्य वरेण्यं धीमहीत्यन्वयं वदन्तः शिवपरत्वं शिवस्य परमपुरुषत्वं अन्यथा सवितृपदस्य ब्रह्मवाचकत्वे 'य' इति पुल्लिङ्गपदेन निर्दिष्टस्य कर्तुरनन्वयापत्तेरित्याहुः **तदसङ्गतं**, भर्गःशब्दस्य शिवासाधारणत्वाभावात्, 'विष्णुसञ्ज्ञ'मितिश्रुतेः, 'काचिद्वरेण्यं सवितुर्भर्गं विष्णवभिधं जगावि'ति तैरेवोक्तत्वात्, बृहद्योगियाज्ञवल्क्येपि 'हिरण्यगर्भं पुरुषं व्योम्नि तद्विष्णुसञ्ज्ञितं' 'भ इतिभासयते लोकान् र इति रञ्जयते प्रजाः ग इत्यागच्छतेऽजस्रं भरगाद्भर्ग उच्यते' इतिकथनात्, किं चापाततः शिवप्रतीतावपि 'रविमध्ये स्थितः सोमः सोममध्ये हुताशनः अग्निमध्ये[1] स्थितं सत्त्वं सत्त्वमध्ये स्थितोच्युत' इति मैत्रायणीयोपनिषदि, 'रविमध्ये स्थितः सोमः सोममध्ये हुताशनः अग्निमध्ये स्थितं सत्यं सत्यस्यान्तः स्थितोऽच्युत' इति बृहद्योगियाज्ञवल्क्ये च सूर्यान्तः सोममुमासहितं शिवमुक्त्वा ततः सर्वान्तरच्युतो भगवानेव प्रतिपादित इति सूक्ष्मेक्षिकया विचारकाणां पुरुषोत्तमस्यैव स्फुरणं, न च मैत्रायणीय एव 'अथ भर्गो देवस्य धीमही'ति 'सविता वै देवस्ततो योस्य भर्गाख्यस्तं चिन्तयामीत्याहुर्ब्रह्मवादिन' इत्यत्र भर्ग इति सन्धिदर्शनेन तस्यादन्तत्वं शङ्क्यं, शकन्ध्वादित्यादेः परैरप्येवंप्रयोगसिद्धेरप्रत्यूहत्वात्, एतेनैव 'तद्भर्गाख्यं किमपि हि पर'मितिसाम्बस्तुतिरपि व्याख्याता ज्ञेया, नापि 'कः सविता का सावित्री'त्युपक्रम्य 'द्वितीयपादो भर्गमय' इति तलवकारब्राह्मणे प्रयोगाददन्तत्वसिद्धिः, पृषोदरादित्वेन सलोपेप्येवं प्रयोगसम्भवात्, अस्तु वादन्तत्वं, तथापि पूर्वोक्तमैत्रायणीयवाक्ये भर्गपदस्य द्वितीयपाद एव अन्वयस्य श्रावणात्तस्य चादन्तत्वपक्षेपि द्वितीयायाश्छान्दसत्वेन स्वादेशसिद्धेस्तदनादृत्य तस्य तृतीयपादेन्वयोररीकरणं मुधैवेतिदिक्, इदं सर्वं शैवानां मतं शाक्तानां च मतं मया **प्रहस्ताख्ये वादे** प्रपञ्च्य दूषितमतो नेह प्रपञ्च्यते, अत 'एक एव नारायण आसीन्न ब्रह्मा न ईशानः पुरुषो ह वै नारायणोऽकामयते'त्यादिषु परब्रह्मणि पुल्लिङ्गप्रयोगस्य सवितृत्वोपाधावपि दर्शनात्पुरुषपदप्रयोगस्यापि तत्प्रकरणे सत्त्वादत्र सवितृपदेन पुरुषोत्तम उच्यत इत्येव युक्तं, वरेण्यपदं विवृण्वन्ति **रूप**मित्यादि, 'तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिन' इति मैत्रश्रुतौ प्रकारवाचिना एवंपदेन कामयितव्यात्मधर्मस्यात्मत्वस्य प्रकारत्वेन परामर्शान्निरुपधिप्रियत्वस्य च वाक्यान्वयाधिकरणे परस्मिन्नेव ब्रह्मणि विचारितत्वात्तथेत्यर्थः ॥ २५ ॥

एवंकथनप्रयोजनमाहुः **वरण** इत्यादि, यतो जीवो यद्भगवन्तं वृणुते तत् प्राकृतत्वात्मकस्य स्वान्यथारूपस्य निवृत्त्यै वृणुतेऽतो वरणे स्वार्थपरता जीवपुरुषार्थसाधकत्वं, तथा च जीवपुरुषार्थसिद्ध्यर्थं वरणीयत्वकथनमित्यर्थः तदुक्तं **योगि**ना 'वरेण्यं वरणीयं तु जन्मसंसारभीरुभि'रिति पूर्वोक्तश्रुतित

१ 'तेजोमध्य' इत्यपि पाठः ।

**भयकामाद्यभावाय भोग्यत्वाय च भर्जनम् । दशलीलावबोधाय देवत्वं दुर्लभत्वतः ॥२७॥**
**दशावस्थावबोधाय प्रीतिर्ध्यानं च कीर्तितम् । स्वस्यायोग्यत्वतो बुद्धिप्रेरणं ध्रुववन्मतम् २८**
**निरोधसिद्धये धीषु बहुत्वं परिकीर्तितम् । जीवे बहुत्वकथनं तत्सम्बन्धिषु सिद्धये ॥ २९॥**
**नित्यसम्बन्धसिद्ध्यर्थं षष्ठी जीवेशयोर्मता । उत्सिक्तभावबोधाय स्वभावत्याजनाय च ॥३०॥**
**वाञ्छाधिक्यज्ञापनाय प्रकर्षः परिकीर्तितः । आशीरन्ते पूर्णतायै प्रेरणं सर्वतोऽधिकम् ॥३१॥**

---

एव सिद्धं, मुख्याधिकारसम्पादकतया मुख्यं प्रयोजनमाहुः **अन्योन्येत्यादि**, यथा मुख्यमहिषीस्थलेऽन्योन्यचित्तव्यतिषङ्गेन परस्परं वरणं तथा रसबोधाय वा वरणीयत्वं सम्यगुदीरितमित्यर्थः, **वा**शब्द एवंभावस्य दुर्लभत्वबोधनाय ॥ २६ ॥

भर्गःपदं विवृण्वन्ति **भयेत्यादि**, पूर्वोक्तमैत्रश्रुतौ एव भर्गःशब्दस्य द्वितीयपादेऽन्वयं बोधयित्वा 'अथ भर्गो इति यो ह वा अमुष्मिन्नादित्ये निहितस्तारकोऽक्षिणी वैष भर्गाख्यो भाभिर्गतिरस्य हीति भर्गो भर्जयतीति वैष भर्गो इति रुद्रो ब्रह्मवादिनोऽथ भ इति भासयतीमान् लोकान् र इति रञ्जयतीमानि भूतानि ग इति गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमाः प्रजास्तस्माद्भरगत्वाद्भर्गः' इत्युक्तत्वात् यामिनामपि 'भ्रस्ज् पाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ भ्राजते दीप्यते यस्माज्जगच्चान्ते दहत्यपि कालाग्निरूपमास्थाय सप्तार्चिः सह रश्मिभिः भ्राजते स्वेन रूपेण तस्माद्भर्ग इति स्मृत' इत्युक्तत्वात् , श्रुतिस्मृतिव्याख्यातं यद्भर्जनं तद् भयकामादयो ये सर्वात्मभावविरोधिनो दोषास्तदभावाय, किञ्चात्र श्रुत्यादिषु नानानिरुक्तिबोधनेन गुणोपसंहारो बोधितः, तथासति 'सोऽश्नुते सर्वान् कामान् ब्रह्मणा सहे'तिश्रुत्युक्तभोक्तृत्वार्थं जीवस्य भोग्यत्वाय च तत्, अत एव स्मृत्यन्तरे 'भर्जयत्यखिलाविद्या'मित्युक्तं, इदं चात्र सङ्कर्षणस्य कार्यं, तेन ब्रह्मविष्णुहरात्मकत्वमप्युक्तप्रायमतो न मैत्रश्रुतेरपि विरोधः, देवपदं विवृण्वन्ति **दशेत्यादि**, 'दिवु क्रीडाया'मिति दशविधक्रीडाबोधनाय देवत्वमुक्तं, तेन लोकवेदातीतरूपता बोधिता, किञ्च 'द्युस्थानो भवती'त्यपि निरुक्तेर्व्यापिवैकुण्ठस्थायित्वेन दुर्लभत्वमतो देवत्वमित्यर्थः, एतदेव **यो**गिनापि निरुक्तं 'दीप्यते क्रीडते यस्मादुद्यते द्योतते दिवि तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतै'रिति, तेन लोकवेदप्रसिद्धस्तदतीतश्च पुरुषोत्तम एवात्र प्रतिपाद्य इति निर्णयादस्या **मुख्य**विद्यात्वं न तु प्रतीकविद्यात्वमिति बोधितम् ॥ २७ ॥

**धीमही**ति पदं व्याकुर्वन्ति **दशावस्थे**त्यादि, **वरेण्य**पदेन पूर्वं प्रीतिः धीमहीत्यनेन ध्यानं च यत्कीर्तितं तत् चक्षूरागादिरूपा या रसस्य दशावस्थास्तदवबोधाय, तथा चैवं मन्त्रार्थमवगत्य ध्याने दशाप्यवस्थाः सम्पाद्य प्राकृतं रूपं नाशयित्वा तस्य स्वाश्रयप्रत्यापत्तिर्भगवता देयेति ज्ञापितं, तृतीयपादं विवृण्वन्ति **स्वस्ये**त्यादिभिः सार्धैस्त्रिभिः, **ध्रुवव**दिति तदुक्तं 'योन्तः प्रविश्य मम वाचमिमां प्रसुप्तां'मि'ति ध्रुवेणैव ॥ २८ ॥

**निरोधसिद्धय** इति प्रपञ्चविस्मरणपूर्वकस्वासक्तिसिद्धये, धीबहुत्वं सर्वेन्द्रियोपलक्षकं, तेन तथेत्यर्थः **तत्सम्बन्धिषु सिद्धय** इति वृतजीवपरिकरभूतेष्वपि निरोधसिद्धये ॥ २९ ॥

**स्वभावत्याजना**येति पूर्वस्वभावस्य निःशेषनिवर्तनाय ॥ ३० ॥

नन्वाशिषा कथं पूर्णतेत्यत आहुः **प्रेरणं सर्वतोधिक**मिति, एवम्प्रकारकभक्तियोगस्य सर्वेभ्यो अदेयत्वेनैवम्प्रेरणाभावादतिकृपयैव प्रेरणं, एवं विलक्षणवरणकार्यत्वादाशास्यमतस्तस्यैव सर्वाधिकत्वात्तेनैव पूर्णतेत्यर्थः, एवं त्रिपदा गायत्री व्याख्याता, यद्यप्यस्याश्चतुर्थः पादः काण्वादीनां बृहदारण्यके श्राव्यते तथाप्यप्राकरणिकत्वात्स प्रकृतोपयोगी न भवतीत्यतो न व्याख्यातः ॥ ३१ ॥

आपः श्रद्धा धर्ममूलं ज्योतिरप्यस्फुटौ परौ ।
भावास्त्रयो मन्त्रपूर्तौ प्रोक्ता व्याहृतिभिः स्फुटाः ॥ ३२ ॥
दोषाभावाय सर्वस्य ब्रह्मात्मत्वेन कीर्तनम् ।
नवीनभावजनक उभयो रतिवर्धनः ॥ ३३ ॥
तस्मात्प्रणव इत्युक्तस्तस्याप्यर्थोऽयमेव हि ॥ ३४ ॥

---

अतः परं शिरो व्याकुर्वन्ति आपइत्यादिसार्धेन, तत्र षोडशाक्षरं 'षोडशाक्षरकं चैव गायत्र्याश्च शिरः स्मृतं' 'ओमापो ज्योतिरित्येष मन्त्रो यस्तु प्रकीर्तित' इतियोगियाज्ञवल्क्यवाक्यात्, तत्र प्रणवस्याग्रे विवरणीयत्वात्तं विहायान्येषामर्थं स्वरूपं चाहुः आप इत्यादि, तत्रापां श्रद्धात्वं छान्दोग्यबृहदारण्यकयोः पञ्चाग्निविद्यायां सिद्धमत आपः श्रद्धा, सा च धर्ममूलं, अश्रद्धया कृतस्य असत्त्वात्, 'अश्रद्धया हुतं दत्त'मितिगीतावाक्यात्, ज्योतिरपि धर्ममूलं, सूर्याग्निभ्यामन्यैश्च ज्योतिर्भिरेव धर्मप्रवृत्तेः, परौ 'रसोऽमृत'मितिपदाभ्यामुक्तौ रसामृतपदार्थौ, अस्फुटौ गूढार्थौ, तथा च येषां यथा विवक्षितौ तथा तैर्ग्राह्याविति प्रकृते मुख्याधिकारिणां विवक्षितौ 'रसो वै स'इति 'अमृतं चैव मृत्युश्च सदसच्चाहमर्जुने'तिश्रुतिस्मृत्युक्तौ, तत्र धर्मपुरस्कारेण मूलरूपात्मकावेव ग्राह्यौ, मन्त्रपूर्तौ शिरोमन्त्रसमाप्तौ, व्याहृतिभि'र्भूर्भुवःसुव'रितितिसृभिः, त्रयो भावा राजसतामससात्त्विकैश्वर्यवीर्यश्रीकृताः, स्फुटाः व्याहृतिवाच्यस्वरूपविचारे प्रकटा एव प्रोक्ताः ॥ ३२ ॥

तेषु अबादिषु च प्राकृतत्वेन दोषवत्त्वं शङ्क्येतेति लिङ्गभूयस्त्वाधिकरणविषयवाक्यसिद्धन्यायेन दोषाभावाय मध्ये ब्रह्मपदेन सर्वस्य ब्रह्मत्वेन कीर्तनं, तथा च शिरोमन्त्रेपि प्रकारान्तरेण ब्रह्मैवोच्यत इत्यर्थः, अतःपरं प्रणवं विवृण्वन्ति नवीनेत्यादि, तत्रोङ्कारस्त्रिवृत् परमात्मवाचकः, 'ततोभूत्त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट् स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मन' इतिद्वादशस्कन्धवाक्यात्, ईश्वरं प्रकृत्य 'तस्य वाचकः प्रणव' इति पतञ्जलिनाप्युक्तत्वाच्च, योगिना तु द्वितीयाध्याये तेषां तेषामृषीणां मतान्युपन्यस्य चतुःषष्टिभेदा उक्ताः, श्रुतिषु च क्वचिदेकमात्रो द्विमात्र इत्येवं षण्मात्रापर्यन्तमुक्तः, तत्र तत्रार्थभेदश्च तस्योक्तः, तत्सर्वमनुपयुक्तत्वादत्र नोच्यते, किन्तु 'ओङ्कारः प्रणवे योऽयः प्रणवं ब्रह्मणि न्यसेत् आनन्दं परमं ब्रह्म तत्प्रविश्यामृतो भवे'दितियोगिवाक्यात् 'ओङ्कारं सर्वेश्वरं द्वादशान्तं आनन्दामृतरूपं प्रणवं षोडशान्त'मितितापनीयश्रुतेश्चोङ्कारप्रणवौ तुल्योच्चारत्वेपि [illegible]र्थतश्च भिन्नौ, तत्र समात्र ओङ्कारः अमात्रः प्रणव इतिभेदः, आथर्वणानां गोपथब्राह्मणे तथाव्युत्पादनात्, ततश्चाप्तेरवतेर्वा निष्पन्नः समात्रः, अव्युत्पन्नस्त्वमात्र इति फलति, गीतायां तैत्तिरीये च 'ओमेत्येकाक्षरं ब्रह्मे'तिकथनादमात्रः प्रणव एव प्रकृते विवक्षित इति तस्यार्थ आनन्दामृतरूप एवेति तत्र प्रकटनीयो यः सर्वात्मभावः सोन्यत्राप्रसिद्धत्वान्नवीनः, अयं च मन्त्रस्तज्जनकः प्रकर्षेण नवः यस्मादिति, योगिना तु 'प्राणनात्प्रणवः स्मृत' इति निरुक्तं, तदेतद्धृदि कृत्वाहुः उभयो रतिवर्धन इति, 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्या'दिति तैत्तिरीये ब्रह्मणः प्राणितृत्वं श्रावितं तदत्रोभयरतिवर्धनत्वेनैवाभिप्रेतं, अन्यथैतद्भावानुदये एकत्रैवोदये वा प्राणनमेव न स्यादिति द्वारत्वादस्य मन्त्रस्य तथात्वं, अत एव प्रतिव्याहृति प्रतिमन्त्रं चास्याभ्यासः सम्पुटीकरणं चानेनेति, एवं च यथा सामराजमन्त्रव्याख्याने 'एष एवोग्र एष ह्येव व्याप्ततम' इत्यादिना मन्त्रपदोक्तानामर्थानां नृकेसरित्वेन विधानमुत्तरतापनीये श्राव्यते तथात्र सर्वमन्त्रार्थानां प्रणवत्वेन विधानमित्यभ्यासबीजकथनेन बोधितम् ॥ ३३ ॥ ३४ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ३५ ॥

## ॥ इति श्रीमद्विठ्ठलेश्वरचरणकृता श्रीगायत्र्याद्यर्थप्रकाशककारिकाः समाप्ताः ॥

---

नन्वयमर्थः सर्वत्र कुतो न प्रसिद्ध इत्याकाङ्क्षायां श्वेताश्वतरश्रुतिमेव समाप्तौ पठन्ति यस्येत्यादि, तथा च स्वरूपज्ञानपूर्वकं देवगुरुभजनेनान्तःकरणस्य वैशद्यरूपे महत्त्वे सत्येवास्यार्थस्य प्रकाशो नेतरथा, ज्ञानं च 'यमेवैष'इतिश्रुतेर्वरणाधीनं, अतस्तदभावान्न सर्वत्र प्रसिद्ध इत्यर्थः ॥

इति श्रीवल्लभाचार्यचरणाब्जप्रसादतः । यदस्फुरत्तदलिखत्तद्दासः पुरुषोत्तमः ॥ १ ॥
एतेन श्रीविट्ठलेशप्रभवो दीनवत्सलाः । प्रसीदन्तु सदा दासबाहिर्मुख्यनिवर्तकाः ॥ २ ॥
एष पुष्पाञ्जलिः श्रीमद्बालकृष्णपदाम्बुजे । समर्पितस्तद्वचनवनराजिसमुद्भवः ॥ ३ ॥
तेन प्रसीदतान्नाथो मादृक्कृपणवत्सलः ॥ ४ ॥

॥ इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीपीताम्बरतनुजश्रीपुरुषोत्तमविरचितं श्रीमत्प्रभुचरणकृतगायत्र्याद्यर्थप्रकाशकारिकाविवरणं समाप्तम् ॥

---

